# पंञ्चमुखहनुमत्कवचम्

श्रीसुदर्शनसंहिता अन्तर्गतम्

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

॥ श्रीपञ्चवदनायाञ्जनेयाय नमः ॥

अथ श्रीपञ्चमुखीहनुमत्कवचप्रारम्भः ॥

श्रीपार्वत्युवाच ।

सदाशिव वरस्वामिञ्ज्ञानद प्रियकारकः ।

कवचादि मया सर्वं देवानां संश्रुतं प्रिय ॥ १॥

इदानीं श्रोतुमिच्छामि कवचं करुणानिधे ।

वायुसूनोर्वरं येन नान्यदन्वेषितं भवेत् ।

साधकानां च सर्वस्वं हनुमत्प्रीति वर्द्धनम् ॥ २॥

श्रीशिव उवाच ।

देवेशि दीर्घनयने दीक्षादीप्तकलेवरे ।

मां पृच्छसि वरारोहे न कस्यापि मयोदितम् ॥ ३॥

कथं वाच्यं हनुमतः कवचं कल्पपादपम् ।

स्त्रीरूपा त्वमिदं नानाकुटमण्डितविग्रहम् ॥ ४॥

गह्वरं गुरुगम्यं च यत्र कुत्र वदिष्यसि ।

तेन प्रत्युत पापानि जायन्ते गजगामिनि ॥ ५॥

अतएव महेशानि नो वाच्यं कवचं प्रिये ॥ ६॥

श्रीपार्वत्युवाच ।

वदान्यस्य वचोनेदं नादेयं जगतीतले ।

स्वं वदान्यावधिः प्राणनाथो मे प्रियकृत्सदा ॥ ७॥

मह्यं च किं न दत्तं ते तदिदानीं वदाम्यहम ।
गणपं शाक्त सौरे च शैवं वैष्णवमुत्तमम् ॥ ८॥

मन्त्रयन्त्रादिजालं हि मह्यं सामान्यतस्त्वया ।
दत्तं विशेषतो यद्यत्तत्सर्वं कथयामि ते ॥ ९॥

श्रीराम तारको मन्त्रः कोदण्डस्यापि मे प्रियः ।
नृहरेः सामराजो हि कालिकाद्याः प्रियंवद ॥ १०॥

दशाविद्याविशेषेण षोडशीमन्त्रनायिकाः ।
दक्षिणामूर्तिसंज्ञोऽन्यो मन्त्रराजो धरापते ॥ ११॥

सहस्त्रार्जुनकस्यापि मन्त्रा येऽन्ये हनूमतः ।
ये ते ह्यदेया देवेश तेऽपि मह्यं समर्पिताः ॥ १२॥

किं बहूक्तेन गिरिश प्रेमयान्त्रितचेतसा ।
अर्धाङ्गमपि मह्यं ते दत्तं किं ते वदाम्यहम् ।
स्त्रीरूपं मम जीवेश पूर्वं तु न विचारितम् ॥ १३॥

श्रीशिव उवाच ।
सत्यं सत्यं वरारोहे सर्वं दत्तं मया तव ।
परं तु गिरिजे तुभ्यं कथ्यते श्रुणु साम्प्रतम् ॥ १४॥

कलौ पाखण्डबहुला नानावेषधरा नराः ।
ज्ञानहीना लुब्धकाश्च वर्णाश्रमबहिष्कृताः ॥ १५॥

वैष्णवत्वेन विख्याताः शैवत्वेन वरानन ।
शाक्तत्वेन च देवेशि सौरत्वेनेतरे जनाः ॥ १६॥

गाणपत्वेन गिरिजे शास्त्रज्ञानबहिष्कृताः ।

गुरुत्वेन समाख्याता विचरिष्यन्ति भूतले ॥ १७॥

ते शिष्यसङ्ग्रहं कर्तुमुद्युक्ता यत्र कुत्राचित् ।

मन्त्राद्युच्चारणे तेषां नास्ति सामर्थ्यमम्बिके ॥ १८॥

तच्छिष्याणां च गिरिजे तथापि जगतीतले ।

पठन्ति पाठयिष्यति विप्रद्वेषपराः सदा ॥ १९॥

द्विजद्वेषपराणां हि नरके पतनं ध्रुवम् ।

प्रकृतं वच्मि गिरिजे यन्मया पूर्वमीरितम् ॥ २०॥

नानारूपमिदं नानाकूटमण्डितविग्रहम् ।

तत्रोत्तरं महेशाने शृणु यत्नेन साम्प्रतम् ॥ २१॥

तुभ्यं मया यदा देवि वक्तव्यं कवचं शुभम् ।

नानाकूटमयं पश्चात्त्वयाऽपि प्रेमतः प्रियम् ॥ २२॥

वक्तव्यं कत्रचित्तत्तु भुवने विचरिष्यति ।

विश्वान्तःपातिनां भद्रे यदि पुण्यवतां सताम् ॥ २३॥

सत्सम्प्रदायशुद्धानां दीक्षामन्त्रवतां प्रिये ।

ब्राह्मणाः क्षत्रिया वैश्या विशेषेण वरानने ॥ २४॥

उचारणे समर्थानां शास्त्रनिष्ठावतां सदा ।

हस्तागतं भवेद्भद्रे तदा ते पुण्यमुत्तमम् ॥ २५॥

अन्यथा शूद्रजातीनां पूर्वोक्तानां महेश्वरि ।

मुखशुद्धिविहीनानां दाम्भिकानां सुरेश्वरि ॥ २६॥

यदा हस्तगतं तत्स्यात्तदा पापं महत्तव ।

तस्माद्विचार्यदेवेशि ह्यधिकारिणमम्बिके ॥ २७॥

वक्तव्यं नात्र सन्देहो ह्यन्यथा निरयं व्रजेत् ।

किं कर्तव्यं मया तुभ्यमुच्यते प्रेमतः प्रिये ।

त्वयापीदं विशेषेण गेपनीयं स्वयोनिवत् ॥ २८॥

ॐ श्री पञ्चवदनायाञ्जनेयाय नमः । ॐ अस्य श्री

पञ्चमुखहनुमन्मन्त्रस्य ब्रह्मा ऋषिः ।

गायत्रीछन्दः । पञ्चमुखविराट् हनुमान्देवता । ह्रीं बीजम् ।

श्रीं शक्तिः । क्रौं कीलकम् । क्रूं कवचम् । क्रैं अस्त्राय फट् ।

इति दिग्बन्धः । श्री गरुड उवाच ।

अथ ध्यानं प्रवक्ष्यामि शृणुसर्वाङ्गसुन्दरि ।

यत्कृतं देवदेवेन ध्यानं हनुमतः प्रियम् ॥ १॥

पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् ।

बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् ॥ २॥

पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम् ।

दन्ष्ट्राकरालवदनं भृकुटीकुटिलेक्षणम् ॥ ३॥

अस्यैव दक्षिणं वक्त्रं नारसिंहं महाद्भुतम् ।

अत्युग्रतेजोवपुषं भीषणं भयनाशनम् ॥ ४॥

पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाबलम् ॥

सर्वनागप्रशमनं विषभूतादिकृन्तनम् ॥ ५॥

उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं नभोपमम् ।
पातालसिंहवेतालज्वररोगादिकृन्तनम् ॥ ६॥

ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् ।
येन वक्त्रेण विप्रेन्द्र तारकाख्यं महासुरम् ॥ ७॥

जघान शरणं तत्स्यात्सर्वशत्रुहरं परम् ।
ध्यात्वा पञ्चमुखं रुद्रं हनुमन्तं दयानिधिम् ॥ ८॥

खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम् ।
मुष्टिं कौमोदकीं वृक्षं धारयन्तं कमण्डलुम् ॥ ९॥

भिन्दिपालं ज्ञानमुद्रां दशभिर्मुनिपुङ्गवम् ।
एतान्यायुधजालानि धारयन्तं भजाम्यहम् ॥ १०॥

प्रेतासनोपविष्टं तं सर्वाभरणभूषितम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥ ११॥

सर्वाश्चर्यमयं देवं हनुमद्विश्वतोमुखम् ।
पञ्चास्यमच्युतमनेकविचित्रवर्णवक्त्रं
शशाङ्कशिखरं कपिराजवर्यम ।
पीताम्बरादिमुकुटैरूपशोभिताङ्गं
पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि ॥ १२॥

मर्कटेशं महोत्साहं सर्वशत्रुहरं परम् ।
शत्रु संहर मां रक्ष श्रीमन्नापदमुद्धर ॥ १३॥

ॐ हरिमर्कट मर्कट मन्त्रमिदं
परिलिख्यति लिख्यति वामतले ।
यदि नश्यति नश्यति शत्रुकुलं
यदि मुञ्चति मुञ्चति वामलता ॥ १४॥

ॐ हरिमर्कटाय स्वाहा ।
ॐ नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय
सकलशत्रुसंहारकाय स्वाहा ।
ॐ नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय
नरसिंहाय सकलभूतप्रमथनाय स्वाहा ।
ॐ नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय
सकलविषहराय स्वाहा ।
ॐ नमो भगवते पञ्चवदनायोत्तरमुखायादिवराहाय
सकलसम्पत्कराय स्वाहा ।
ॐ नमो भगवते पञ्चवदनायोर्ध्वमुखाय हयग्रीवाय
सकलजनवशङ्कराय स्वाहा ।
ॐ अस्य श्री पञ्चमुखहनुमन्मन्त्रस्य श्रीरामचन्द्र
ऋषिः । अनुष्टुप्छन्दः । पञ्चमुखवीरहनुमान् देवता ।
हनुमानिति बीजम् । वायुपुत्र इति शक्तिः । अञ्जनीसुत इति कीलकम् ।
श्रीरामदूतहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः ।
इति ऋष्यादिकं विन्यसेत् ॥

ॐ अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः ।
ॐ रुद्रमूर्तये तर्जनीभ्यां नमः ।
ॐ वायुपुत्राय मध्यमाभ्यां नमः ।
ॐ अग्निगर्भाय अनामिकाभ्यां नमः ।
ॐ रामदूताय कनिष्ठिकाभ्यां नमः ।

ॐ पञ्चमुखहनुमते करतलकरपृष्ठाभ्यां नमः ।

इति करन्यासः ॥

ॐ अञ्जनीसुताय हृदयाय नमः ।

ॐ रुद्रमूर्तये शिरसे स्वाहा ।

ॐ वायुपुत्राय शिखायै वषट् ।

ॐ अग्निगर्भाय कवचाय हुम् ।

ॐ रामदूताय नेत्रत्रयाय वौषट् ।

ॐ पञ्चमुखहनुमते अस्त्राय फट् ।

पञ्चमुखहनुमते स्वाहा ।

इति दिग्बन्धः ॥

अथ ध्यानम् ।

वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं

दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा ।

हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रिं हलं

खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिवीरापहम् ।

अथ मन्त्रः ।

ॐ श्रीरामदूतायाञ्जनेयाय वायुपुत्राय महाबलपराक्रमाय

सीतादुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय

फाल्गुनसखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय

सप्तसमुद्रनिर्लङ्घनाय पिङ्गलनयनायामितविक्रमाय

सूर्यबिम्बफलसेवनाय दुष्टनिवारणाय दृष्टिनिरालङ्कृताय

सञ्जीविनीसञ्जीविताङ्गदलक्ष्मणमहाकपिसैन्यप्राणदाय

दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीतासहित-

रामवरप्रदाय षट्प्रयोगागमपञ्चमुखवीरहनुमन्मन्त्रजपे विनियोगः ।

ॐ हरिमर्कटमर्कटाय बंबंबंबंबं वौषट् स्वाहा ।

ॐ हरिमर्कटमर्कटाय फंफंफंफंफं फट् स्वाहा ।

ॐ हरिमर्कटमर्कटाय खेंखेंखेंखेंखें मारणाय स्वाहा ।

ॐ हरिमर्कटमर्कटाय लुंलुंलुंलुंलुं आकर्षितसकलसम्पत्कराय स्वाहा ।

ॐ हरिमर्कटमर्कटाय धंधंधंधंधं शत्रुस्तम्भनाय स्वाहा ।

ॐ टंटंटंटंटं कूर्ममूर्तये पञ्चमुखवीरहनुमते

परयन्त्रपरतन्त्रोच्चाटनाय स्वाहा ।

ॐ कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं

तंथंदंधंनं पंफंबंभंमं यंरंलंवं शंषंसंहं

ळङ्क्षं स्वाहा ।

इति दिग्बन्धः ।

ॐ पूर्वकपिमुखाय पञ्चमुखहनुमते टंटंटंटंटं

सकलशत्रुसंहरणाय स्वाहा ।

ॐ दक्षिणमुखाय पञ्चमुखहनुमते करालवदनाय नरसिंहाय

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः सकलभूतप्रेतदमनाय स्वाहा ।

ॐ पश्चिममुखाय गरुडाननाय पञ्चमुखहनुमते मंमंमंमंमं

सकलविषहराय स्वाहा ।

ॐ उत्तरमुखायादिवराहाय लंलंलंलंलं नृसिंहाय नीलकण्ठमूर्तये

पञ्चमुखहनुमते स्वाहा ।

ॐ उर्ध्वमुखाय हयग्रीवाय रुंरुंरुंरुंरुं रुद्रमूर्तये

सकलप्रयोजननिर्वाहकाय स्वाहा ।

ॐ अञ्जनीसुताय वायुपुत्राय महाबलाय सीताशोकनिवारणाय

श्रीरामचन्द्रकृपापादुकाय महावीर्यप्रमथनाय ब्रह्माण्डनाथाय

कामदाय पञ्चमुखवीरहनुमते स्वाहा ।

भूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिन्यन्तरिक्षग्रह-

परयन्त्रपरतन्त्रोच्चटनाय स्वाहा ।

सकलप्रयोजननिर्वाहकाय पञ्चमुखवीरहनुमते

श्रीरामचन्द्रवरप्रसादाय जंजंजंजंजं स्वाहा ।
इदं कवचं पठित्वा तु महाकवचं पठेन्नरः ।
एकवारं जपेत्स्तोत्रं सर्वशत्रुनिवारणम् ॥ १५॥

द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम् ।
त्रिवारं च पठेन्नित्यं सर्वसम्पत्करं शुभम् ॥ १६॥

चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम् ।
पञ्चवारं पठेन्नित्यं सर्वलोकवशङ्करम् ॥ १७॥

षड्वारं च पठेन्नित्यं सर्वदेववशङ्करम् ।
सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम् ॥ १८॥

अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम् ।
नववारं पठेन्नित्यं राजभोगमवाप्नुयात् ॥ १९॥

दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम् ।
रुद्रावृत्तिं पठेन्नित्यं सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २०॥

निर्बलो रोगयुक्तश्च महाव्याध्यादिपीडितः ।
कवचस्मरणेनैव महाबलमवाप्नुयात् ॥ २१॥

॥ इति श्रीसुदर्शनसंहितायां श्रीरामचन्द्रसीताप्रोक्तं
श्रीपञ्चमुखहनुमत्कवचं सम्पूर्णम् ॥